श्रीगणपतिर्जय

श्रीमल्लहरिवल्लभकविमहः

# केशप्रसाधनकाव्यम्



श्रद्धाविशेषात्प्रणता पुरैव क्षमापिता चाप्यपराधराशेः ।
विशुद्धबुद्ध्या विषयीकृताऽसि प्रभु प्रसीद त्रिपुरे परेशि ॥ १ ॥
गौर्याः श्लथा साऽवतु नीलखण्डोज्ज्वलद्युतिर्लम्बकचावलिर्वः ।
अन्वक्परिष्वक्तपरस्वरूपा लीलाकरी या ललतीव काली ॥ २ ॥
श्लक्ष्णार्द्रकेशान्दधती प्लवान्ते सोसूय्यमाणानधिकम्बुकण्ठम् ।
जयत्युमा स्पर्धितनीलकण्ठकण्ठस्थहालाहलहारिलक्ष्मीः ॥ ३ ॥
एकेन पूर्वं कविना प्रियाया रोमावली भूरि यथा व्यवर्णि ।
उद्दिश्य तस्याः कुतुकी शिरस्यांस्तथैव चाहं कथयामि किञ्चित् ॥ ४ ॥
संप्रोञ्छय स्निग्धय शोधयाऽतिकचान् परिग्रन्थय नागजातम् ।
आपूरयाऽऽवन्धय शीर्षभूषां स्नाता वधूः शीर्षमुपस्करोति ॥ ५ ॥

---

१ अत्र तावद्भक्तस्य संकल्पितार्थनिश्चयं प्रसादनीयायां श्रीदेव्यां त्रिपुरायां सर्वादौ कृत्रिमभावपूर्वकप्रणमन सकलापराधक्षमापण मार्वदिकं स्मरण च याथितपि परमामो-चेर्नी पुष्णाति. २ नीलमणिखण्डस्य उज्ज्वलद्युतिरिवोज्ज्वलद्युतिर्यस्याः सेति गर्भ्यगप-लुप्तो बहुव्रीहिः समासः. ३ गौर्यालक. ४ श्रीमहाकाली देवी. ५ अतिशयेन वेष्टयमानान् यङन्तात्सूत्रे शतरि प्रयोग.. ६ मनोहारि. ७ विश्वेश्वरनाम्ना. ८ अमूनि संप्रोञ्छये-त्यादीनि रूपाणि, अनेकक्रियासमुच्चये वा लोट् तस्य हिस्वौ तध्वमोर्विषये या सामा-न्यार्थस्य धातोरनुप्रयोगास्तिवादय, इति व्याकरणेन प्रकृते शीर्षमुपस्करोतीति सामा-न्यार्थे प्रयुक्तेऽत्र करोतौ धातौ पुन. पुनः संप्रोञ्छयतीत्याद्यर्थकानीति समर्थनीयम् । यथा शिशुपालवधे पुरीमवस्कन्द लुनीहि नन्दनमिति श्लोके । नागजातं च सिन्दूरं.

नितम्बलम्बा कवरी मृगाक्ष्या व्युत्कील्यमानाऽऽप्लवनाय दोर्भ्याम् ।
भर्तुर्मुखेन्दो. सविधालयान्ती नात्यल्पमाना रजनीव भाति ॥ ६ ॥
वेणीं निबन्धामियमादधाति पृष्ठाग्रदेशे चटुलायताक्षी ।
नागाङ्गसिन्धोः किमुतास्त्रुनीर्लमेकत्र नीतां सकलां तरङ्गैः ॥ ७ ॥
मुसंनिता [illegible]निगं हृदीगर्भेहोज्ज्वलन्मन्मथदीपरूढा ।
निलीयते संप्लवनाय मुक्ता धूम्येव नूनं कवरी रमण्या ॥ ८ ॥
स्नानं निर्थत्याः सुदृशः कचाना पङ्क्तिर्युतोच्चैः पतदम्बुवाहात् ।
सुपर्वधुन्या मधुपेयुपीव संगं किलाभाति कलिन्दकन्या ॥ ९ ॥
पृष्ठान्तरे-दीर्घतरा विकीर्णा शिरोजराजिः शिशिरांशुमुख्याः ।
छायेव निश्शेषकलेवरान्त.प्ररूढतारुण्यमहाद्रुमस्य ॥ १० ॥
स्नान्त्या घनालक्तकरक्तहस्तविमर्द्यमानाश्चिकुरा युवत्याः ।
प्रपश्यतोऽन्योन्यनियुध्यमानध्वान्तातपक्रीडितमीक्षयन्ति ॥ ११ ॥
नियामसोऽर्थ्योतनसीकराणां जलार्द्रकाणां छलतः कचानाम् ।
निरम्बरं मेघतते प्रवृष्टिरितीन्द्रजालं वितनोति बाला ॥ १२ ॥
आकुञ्चिताञ्जिनगर्भान्प्रलम्बान्केशान्मरुत्प्रस्फुरतः सुकेश्याः ।
मन्ये वियुक्ताहतये विमुक्तं नागाङ्गनास्त्रं किमपीति मन्ये ॥ १३ ॥
पराजितः पञ्चशरो हरेण प्रागेककस्तेन पुनर्युयुत्सुः ।
मध्याः कचौघ रचयत्यनीकव्यूहं रिपोस्तद्गुणसैन्यजैत्रम् ॥ १४ ॥

---

१ [illegible] पद्य मयैव शार्दूलविक्रीडिते वृत्ते, 'बध्वा कोमलशीर्षकुन्तलततिर्लम्बा नितम्बावधि [illegible] दोर्युगलव्युत्कील्यमाना शनैः। भर्तुर्वक्त्रकलानिधेः सविधतो [illegible]माना[illegible] यान्ती मन्थरमन्थर प्रणयिनी रात्रीव सराजते' इति समा[illegible] पद्यान्तरमुन्नेति. २ उन्मोच्यमाना. ३ मध्यमयानेत्यर्थः. ४ शैवाल 'जल[illegible] शैवाल' इत्यभिधानम्. ५ धूमसहिते. ६ विध विधाने इति तौदादिको तुम्विभा[illegible] प्रयोग ७ निर्गमनात् ८ निर्गतमम्बरमाकाश यथातथा वृष्टिस्तु असंभवा [illegible] वर्णनया तु [illegible]. ९ मात्राविशेषकौतुकजातम १० एकमपि [illegible] प्रभावात्[illegible] भागतं. ११ [illegible]विच्छित्तिविशेषेण विवन्त्मित कृत्यम् १२ [illegible] १३ [illegible] १४ गणा हरविजयवर्णिता कालमुगलप्रभामय[illegible] पुष्पागनन्दिषेणादयोऽनन्तास्तत्सैन्यजैत्र केशाना ततो[illegible].

स्नाने कृते कङ्कतिकाधृतानां स्तनद्वयाग्रस्तिमितां[1] प्रियायाः ।
शिरोरुहाणां पटली जिहीते घटास्यसक्ताऽसितरश्मिभङ्गीम्[2] ॥ १५ ॥
आनायतीदं[3] सुदृशोऽधिपृष्ठं शीर्षण्यवृन्दं परितः प्रकीर्णम् ।
प्रपश्यतः किञ्च विलासिनोऽपि तच्चञ्चलं मीनेति[4] हन्त चेतः ॥ १६ ॥
पृथक्पृथग्द्वित्रततिक्रमेण संमृज्य केशान्दृभती[5] मृगीदृक् ।
तथा व्यधासीत्कवरीं यथेष्टहृद्बन्धनी शृङ्खलिकेयमासीत्[6] ॥ १७ ॥
अदोऽवलग्नं स्तनभारखिन्नं खेदं पुनर्मैत्रसुतः कचौघात् ।
दोर्भ्यां विदित्वेति नु चञ्चलाक्षी परिष्करोत्यंसपुरोधृतं[7] तम् ॥ १८ ॥
विशोष्यमाणान्महतस्तरुण्याः कृताप्लवाया अवलोक्य केशान् ।
अहो स्वयं प्रत्युत सान्द्रसार्द्रः[8] शीघ्रं बभूवानभिको विमुग्धः ॥ १९ ॥
भीर्वाः समुद्धृत्य वितायमाना गन्धभ्रमद्भृङ्गभृता प्रवेणी ।
वंशस्थलीं व्याप्य विजृम्भमाणा तमालवल्लीव विभाति कापि ॥ २० ॥
अट्टाधिरूढा सलिलार्द्रमृष्टान्विशोषयन्ती चिकुरान्सलीलम् ।
चकास्ति चारु स्वयमेव जाने स्वं वीजयन्ती चमरेण बाला[9] ॥ २१ ॥
चन्द्राननायास्ततकेशपाशादाप्लावनान्ते घननीलकान्तेः ।
निशीव तारा वियतोऽवदातात्समन्ततो वारिकणाः पतन्ति ॥ २२ ॥
न स्नेहवृद्धिर्निवहैर्जडानां सह प्रशस्तेति विजानतीव ।
स्नाता करान्तः परिगृह्य कान्ता मुहुर्मुहुर्धूनयते[10] शिरोजान् ॥ २३ ॥
बाहूपरि प्रोद्धलिताः प्रमुक्तबन्धाः शिरस्या हरिणेक्षणायाः ।
दधत्यभिख्यां नवभद्रगन्धशाखोपगूढा[11] इव गूढपादैः[12] ॥ २४ ॥
उद्बन्धनीयाः कुटिला जडाश्चेत्ते स्नेहयुक्त्या शनकैः प्रसाद्याः ।
स्फुटं करोत्यर्थममुं किलेयं प्रबध्नती स्निग्धकचान्विदग्धा[13] ॥ २५ ॥

---

१ स्तनद्वयस्य अग्रे स्तिमिता चक्राकारेण स्थिरा. २ कुम्भमुखनिबद्धनीलरज्जुर नाम्. ३ आनायो जाल तदिवाचरतीति क्विप् ४ मीन इवाचरति. ५ ग्रथ्नती. ६ आ तिग्राम्यान्. ७ स्कन्धाग्रभागे हस्तेन निगृहीतम्. ८ प्रस्वेदाख्यसात्विकभाववत्वादु चरितसार्द्रतावान्. ९ बालत्वेनैव समुत्प्रेक्षितमिद शोभते चमरवीजनम्. १० जलां वहपरिचयदूरीकरणार्थं कम्पयते. ११ भद्रगन्धश्चन्दनम्. १२ सर्पाः. १३ कचेषु क टिल्य जाड्य च व्यङ्ग्यमस्त्येव.

लोकोत्तरत्वं बहुलं निरीक्ष्य कदम्बके शीर्षरुहां प्रियायाः ।
तत्राऽनृजुत्वं मृदुतान्वित यद्विनीलभावश्च शुचित्वयुक्तः ॥ २६ ॥
दीर्घैर्घनैर्नीलैश्चिकुरैः परीतं प्रोष्ठीदृशः पृष्ठतटं वरिष्ठम् ।
भातीव हैमं फलकं प्रजातमपीनिपातं विषमाशुगस्य ॥ २७ ॥
इयं समांशस्य पुरो न सुभ्रूर्लावण्यवापी किल काचिदस्ति ।
इदं न पृष्ठं च तलं तदीयं नाभी च केशा अपि पङ्कपङ्क्तिः ॥ २८ ॥
मृदुत्वलम्बत्वघनत्वतुल्या अपि श्लथास्ते क कचा युवत्याः ।
स्पृष्टक्षितिश्चानुशरत्क्षयिष्णुः शिखण्डभारः शिखिनः स च क ॥ २९ ॥
व्याली ध्रुवं स्वोपमितेर्वधूटीवेण्या महत्या सह मोमुदीति ।
स्यागजायते स्वाहितबर्हिबर्हपराभवो विश्लथयाऽनया यत् ॥ ३० ॥
कान्ता ततश्यामलरश्मिबन्धंबध्नाति गाढं बहुभिः प्रकारैः ।
आस्येन्दुशत्रो प्रबलस्य राहोः कृत्स्नं कुटुम्बं न्विव मूर्धजौघम् ॥ ३१ ॥
सुकर्कशान्कण्टकसंकटांश्च रजोविमिश्रान्ननु चिन्तयित्वा ।
स्निग्धाश्चलाक्ष्या धृतचाकचिक्याः कचा हसन्तीव कचांश्च मर्त्याः ॥३२॥
पर्यन्तबन्धाश्चिकुराश्चकोरीदृशो व्यलम्बन्त तथा प्रलम्बाः ।
दृशाद्यथान्वक्षकृतप्रनीलोत्तरीयतुल्यप्रतिभानमापु. ॥ ३३ ॥
बध्वा इयन्तो विलसन्त्यनन्तास्ते कुन्तला हन्त नितान्तकान्ताः ।
यान्मार्जयन्ती गणशश्चिराय मुहुर्मुहुर्विश्रममेति यत्सा ॥ ३४ ॥

---

१ उत्तरत्वाशंकायाः परिहारः २ श्रेष्ठम् ३ ह्यापह्नुतिरर्थचित्रम्, 'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः' इति लक्षणात्मा च गम्योत्प्रेक्षानुप्राणितेयम्. ४ मयूरस्य. ५ भागिनी वधूवेण्या सह स्वोपमानादेव नितरां मोदते यतो निजोपमेयया तया स्वाहितबर्हपराभवो भवति एतेन वधूवेणी मयूरबर्हादपि रमणीयेति कविप्रौढोक्तिसिद्ध-वस्तुना वस्तु व्यतिरेकालङ्कारलक्षणमसमन्वितार्थविशेषो हि वस्तु तदत्रोत्प्रेक्षान्तरित बोध्यम्. ६ ततश्यामलरश्मिभिर्बन्धं वा बध्नाति इति बध्नातेर्णमु, तृतीयासप्तम्योरुपपदयोः कषादिषु धातोर्णमुलनुप्रयोगात् केशानां श्यामलकान्तिमत्त्वं नितरां स्पष्टं ७ निपदनकालिकशयनभूमिस्थितपृष्ठस्पर्श्यामान्. ८ प्रायेण नितम्बफलके श्रिय स्वोत्तरीय वेण्युपर्येव दत्तं तत्तुल्यत्वमिति केशानां वर्णनम् ९ एतेन केशानां प्रचुरमानत्वं व्यज्यते.

उत्संयतस्याब्जदृशः प्ररत्नशिरोमणेः संपतिता समीपे ।
केशच्छटा स्रस्तपटा चकास्ति छायेव नीचैः किल दीपकस्य ॥ ३५ ॥
कपाटसंधिस्खलिता तमिस्रे तन्वी प्रदीपस्य विभेव काचित् ।
सिन्दूररेखा मसृणा सुमुख्याः शिरोग्रभागे स्फुरति प्रभूतम् ॥ ३६ ॥
श्लथीकृता स्नानकृते सुकेश्यास्तरङ्गिता केशततिः सुदीर्घा ।
अन्वक्षतः स्वीयगृहाधिरूढ्यै निःश्रेणिका नूनमनन्यजस्य ॥ ३७ ॥
पश्योच्चकैरग्रत एव शृङ्गाकारं जलार्द्रांश्चिकुरान्प्रवेष्ट्य ।
प्रोत्तिष्ठतीयं प्रसभेन शम्भोः कपर्दशोभामिव तां विजेतुम् ॥ ३८ ॥
लीलालयादर्शतलान्तराले विलासिनी लम्बविशीर्णकेश्यम् ।
विलोकते मूर्त्तमिवात्मनोङ्गसौन्दर्यदर्पं निचितं चिराय ॥ ३९ ॥
श्यामेति बालाव्यपदेशमूलं न युज्यते षोडशवार्षिकीत्वम् ।
किन्तूचितं श्यामितसर्वपृष्ठं तद्वैभवं श्यामशिरोरुहाणाम् ॥ ४० ॥
वह्न्यङ्कुराभा जलयोगमाप्य केशाः प्रसीदन्ति परं प्रियायाः ।
जडानुबन्धेन ननु प्रकामं के नाम दृष्टाः कुटिला न हृष्टाः ॥ ४१ ॥
तारुण्यवत्या धृतनीलशाटीकलिन्दकन्यैकह्रदे स्थिराम्बौ ।
वक्रा प्रलम्बोद्ग्रथिता प्रवेणी नागः स सुप्तः किल कालियाख्यः ॥ ४२ ॥
पृष्ठेऽङ्गनायाश्च्युतदीर्घकेशावलिश्चिरादातपशोष्यमाणा ।
संसूचिकेव प्रतिभाति नीललेखावली कामजगज्जयानाम् ॥ ४३ ॥
संदिग्धिताः शीर्षमणेर्द्विपार्श्वसीमन्तिताः सान्द्रकचाः प्रियायाः ।
इमे क्षणं मे मणिभिन्नमध्यनीलाम्बुसिन्धोः स्मृतिमानयन्ति ॥ ४४ ॥

---

१ प्रकृष्टानि रत्नानि स्वान्यानि हरितलोहितपिङ्गनीलानि यत्र स शिरोमणिः सीमन्ताभ-
तस्य. २ कामस्य. ३ तिष्ठतेरनूर्ध्वकर्मण्यर्थे आत्मनेपदं इहोर्ध्वकर्मार्थे युक्त परस्मै-
म्. ४ दर्पस्य श्यामतया वर्णन कविसंप्रदायः. ५ श्यामा षोडशवार्षिकी इति कोशे.
लोकेपि कुलका स्वभृतिदिनसूचका भित्तौ काश्चिदलातरेखाः कुर्वन्ति तथा. ७ प-
हितनीलशाट्येव यमुनाह्रदस्तन्मध्ये प्रलम्बमानवेणीरूपितः सुप्तः कालियाहिरित्यत्र
कमलङ्कारः. ८ मणीनां सर्वप्रभावशालित्वात्तेन सिन्धुजलभेदन केशसीमन्ती-
णरूपित.

नैव्याङ्गनाया नववेणिरन्यान्मूर्ध्नोऽनुवेलं निहिताम्बराग्रम् ।
केशावलिश्रीत्रपितं नु भूत्वा शनैः शनैः प्रच्यवते स्वतो हि ॥ ४५ ॥
स्कन्धाग्रलग्नौ विपुलेक्षणायाः कलापकौ शीर्षरुहां श्लथानाम् ।
श्रोत्रान्तिकालम्बितफुल्लनीलोत्पलच्छदश्रेणिविभौ विभातः ॥ ४६ ॥
यान्तं पुरोनायकमभ्यवेक्ष्य क्षौमान्तराले तरलायताक्षी ।
अशेपलोकत्रयकालिमश्रीदस्यून्कचान्स्वान्परिनिह्नुते द्राक ॥ ४७ ॥
नूनं प्रलम्बाग्रनिबद्धरश्मिधम्मिल्लदण्डोपनिवेशभीतेः ।
कटीतटी हन्त मृगेक्षणाया अमांसलत्वं सुतरां दधाति ॥ ४८ ॥
शिरीषमालामृदुलातमगौरप्रोद्यौवनासेचनकाखिलाङ्ग्याः ।
पृष्ठस्थकेशावलयोऽभिकानां ता. कालकालाः पतिता इवेक्षाः ॥४९ ॥
वध्वा. प्रमुक्तं सुरभिं कचौघं संमार्जयन्ती खलु नापितस्त्री ।
तत्र स्थितालीन्न विवेद पूर्वं दृष्टाऽथ तैर्द्रोण्णि परं विवेद ॥ ५० ॥
वाताधुते वाससि वर्त्मगाया विचोलकाया सहसा चलाक्ष्याः ।
अंसाग्रलम्बं हि विकीर्णकेश्यं ह्रीरक्षणकृष्णांशुकमेकधासीत् ॥ ५१ ॥
प्रस्नीमता व्यायतताऽच्छता च शीर्षोद्भवानां सुदृशोऽतिचित्रा ।
आस्तीर्य तानासरवद्यतः सा स्वप्तुं सुशक्नोत्यपि कौतुकं चेत् ॥५२॥
स्नानावसाने सरसाः शिरस्याः कपोलपालीलुलितास्तरुण्याः ।
साजात्यभाजश्चिरविप्रयुक्तालकाँल्लुलन्तीव मिथो मिलन्तः ॥ ५३ ॥
द्राघीयस. केशभरस्य दम्भाद्विश्लेष्यमानस्य चितं नितान्तम् ।
तद्यौवनं सम्यगमोद्भृदन्त शिर.पश्चात्प्रोद्गमतीव वध्वाः ॥ ५४ ॥

---

१ गुर्जरदेशा, मा हि सीमन्तग्लयारण न परिचिनोति एप देशविशेपाचार. २ दयित सामस्थायायिन वीक्ष्य वेणी विधापयन्ती वधूर्लज्जिता झटिति दुकूलाञ्चलेन शिर. स्थगति तत्राय यथा नेतारं राजकीय दृष्ट्वा पूर्वमेव तादृशा लोका आख्यान्मोपकरणेन गोपयन्ति तथेति शब्दार्थोभयशक्त्युद्भववस्तुना वस्तुध्वनि प्रकृतेऽत्र निबद्ध. ३ स्नर्बानिम्. ४ नेत्राणि. ५ अत्र स्वत. समविना वस्तुना उपमालङ्कारध्वनि . ६ रक्षरोमांचे नजन्न रक्षणार्थमिदम ७ सान्द्रता. ८ चिकुरन्वरूपजातिसाम्यवत . ९ मुच्यमानस्य. १० मार्तानि मान् न तथेति.

संमृष्टये पातितशीर्षवक्त्रां चिरं मिषन्त्यौ पथिकस्य वामाम् ।
तत्कैशिकश्यामवने स्वसार्थभ्रष्टं मनः शोधयतो नु दृष्टी ॥ ५५ ॥
केश्यं कराग्रस्थिततोयकुम्भधाराप्रपातैरिदमिन्दुमुख्या ।
निषिच्यते नीलघनं नितान्तं शृङ्गारकैदार्यमुतात्मकीयम् ॥ ५६ ॥
तां द्योतयन्ते प्रमदां स्वगात्रप्रोच्चैःस्फुरद्धौरिमदुर्दिनौघे ।
सीमन्तिता एव कचाः सुचारुमृष्टा ललाटोपरि कालकालाः ॥५७॥
एकस्तनोपर्यधिलम्बमाना वक्राः कचा वर्त्तितमज्जनायाः ।
कृतोपगूहाः खलु नर्मदेशशीर्षे लडन्तीव फणीन्द्रडिम्भाः ॥ ५८ ॥
सीमन्तिनी मूर्धनि भूरिदीर्घसुवीध्रनीरन्ध्रशिरोरुहाणाम् ।
भारोपधेः संचितमात्मनस्तमनन्तसौभाग्यभरं नु धत्ते ॥ ५९ ॥
तत्तादृगात्मीयशिरोजभारभरैव शीर्षे नु विलासिनी सा ।
प्रयाति हंसीकरिणीसदृक्षमनोज्ञताप्यायितमन्दयानम् ॥ ६० ॥
प्रहर्त्तुकामस्तरुणाननेकान्मायापटुर्नूनमतीव कामः ।
यद्दर्शितैः पद्मदृशः शिरोजैस्तान्पूर्वमन्धीकुरुतेऽचिरेण ॥ ६१ ॥
प्रत्यक्पुरून्नीतवगुण्ठवस्त्रा पश्चाच्चकासत्कवरिः स्थितेयम् ।
सलीलचक्रीकृतचारुशुण्डा प्रलम्बपुच्छा करिणीव काचित् ॥ ६२ ॥
विक्षिप्य विक्षिप्य करद्वयेन प्रोच्छोपयन्ती चिकुरॉश्चिरण्टी ।
पृष्ठस्थलीं चापि सघर्मतोयांमयत्नतो वीजयति प्रकामम् ॥ ६३ ॥
वध्वाः प्रमृष्टाः करकङ्कताग्राद्दन्तार्भिषन्त्या वदनाग्रलम्बाः ।
स्नानार्द्रकेशाः खलु मन्मथाश्वाधृतस्फुरत्काण्डपटप्रकाण्डाः ॥ ६४ ॥
कान्ताकवर्यां परिपज्यमानमल्लीप्रसूनानि नवं स्फुटन्ति ।
प्रावृट्तमिस्रापरिलक्ष्यमाणखद्योतशोभां कथयन्ति नूनम् ॥ ६५ ॥

---

१ वामां मिषन्त्यौ पथिकस्य दृष्टी इत्यन्वय.. २ सुन्दर्याः सुन्दरान्केशान्वीक्षितु पथिकस्य दृङ्मनसे नितान्तं लभे इति भावः. ३ क्षेत्रपङ्क्तिम्. ४ सार्वत्रिकैकविधतेजोतिशयेऽपि न प्रत्यक्षं केवल विना विजातीयप्रबलप्रकाशम् तादृशोऽत्र केशाः सुन्दरी विस्पष्ट दर्शयन्ते. ५ कान्ताया हंसीकारिण्युभयसाधारणसुन्दरमन्थरगमनस्य सुनिविडबहलकुन्तलधारणं हेतुतयोत्प्रेक्षित. ६ कामविह्वलीकुरुते. ७ सातपदेशास्थितेः. ८ अश्वानां मुखोपरि ऑंधेरी इति प्रसिद्धा जवनिका.

कृताश्रयाया अधिपृष्ठभागं शीर्षाङ्कुरानां खलु पांपतीनाम् ।
दुग्धाद्धरि प्राप्तमिवावभाति मालिन्यमन्तःकरणस्य सर्वम् ॥ ६६ ॥

सर्वैरुपर्यैव सुवर्णपट्टी प्रायेण दृष्टा कषपट्टिकायाः ।
निशलकेश्यां इह गौरगायां मयेक्ष्यते तु प्रतिलोममेतत् ॥ ६७ ॥

प्रसंग्तत्वस्य शिरोरुहाणां कर्तुं प्रवृत्ता समतां नताङ्ग्याः ।
असाम्यलज्जानिहतेव नाभिमिन्धौ न्यपतत्खलु रोमरेखा ॥ ६८ ॥

मयूरबर्हाकृतिमित्रभावं कचावलीनां ततवृन्दमस्याः ।
वसन्तबन्धुप्रमदागृहस्य किमप्यनुत्तानितवीध्रनीध्रम् ॥ ६९ ॥

यस्याः प्रवातोद्धुतमुत्तरीयं श्लिष्टोर्ध्वलम्बितवेणिदण्डे ।
आत्मीयसारूप्यजयध्वजाग्रस्फुरत्पताकाकुतुकं तनोति ॥ ७० ॥

नीचैस्तरां पृष्ठभुवोऽपि यातान्स्नानक्रमे मूर्धरुहो मृगाक्षी ।
बाढं सरन्त्युच्चपदप्रसृतानिवोच्चकैर्वेष्टयते कराभ्याम् ॥ ७१ ॥

यस्याः सहस्रस्फट एष दीर्घधम्मिल्लरूपेण स नागराजः ।
धृतोपरिष्टाद्धृतमौक्तिकाभा सा चापि शाटी खलु कञ्चुकोऽस्य ॥७२॥

आलम्बिकेशा विपुलेक्षणा सा लीलालसं केलिगृहे चलन्ती ।
स्वान्वक्षभूमार्जनमीक्ष्य दोष्णोर्गृह्णाति केशान्वलितानना द्राक् ॥७३॥

पश्चाद्धृतं नव्यसुलोचनाया आभोगवत्सान्द्रशिरोजवृन्दम् ।
रत्या महिष्या खलु सैनिकस्य भातीव पृष्ठे फलकं विबद्धम् ॥ ७४॥

विशेषगौरे वदने शिरोजान्दृष्ट्वाऽतिरम्याञ्चलितान्युवत्याः ।
लोकेऽपि लोकैर्धुरि गौरतायाः प्रशस्यते श्यामलतैव नूनम् ॥ ७५ ॥

---

१ शुभ्रा पतितनताम, आहत. [illegible] भूते इति टि. २ परीक्षार्थं संघर्ष्यमाणा [illegible] ३ स्त्रिया निश्चलकेशीनात्तन्मुर्गात्पृष्ठोपरिस्थितशलकेशस्थितोविपरीतम्. ४ अत्र [illegible] यथा [illegible] पततीति वस्तुध्वनिः. ५ उत्तानार्थमेव लम्बमेकत्र निहितम्. ६ [illegible]. ७ अहंभाव [illegible] सारूप्यजयस्य ध्वजाग्रे वेणीरूपे पताकायितमुत्तरीयम्. ८ [illegible] ९ आनम्रलनेनैव दृष्ट केशकर्तृक भूमार्जन युज्यते. १० [illegible]

आम्लानितायाश्च्युतकृत्स्नकेशपतिष्णवस्तोयकणाः सधारम् ।
राजन्ति निर्ग्रन्थिविनीलतन्तुमुक्ता यथा स्यूतलघिष्ठमुक्ताः ॥ ७६ ॥

पीनस्तने वक्षसि नैकरूपकीर्णाः कियन्तः सुतनोः कचाग्राः ।
अपां प्रपाताद्विरलावशिष्टनीलाब्जपत्रीमकरोधुरीणाः ॥ ७७ ॥

तन्मूर्ध्न्यहो लोहितमुत्तरीयं सौवर्णपुष्पस्तबकास्ततोऽधः ।
समीप एवाऽसितकेशलेखा गौरालिकं प्रागिति केऽपि रङ्गाः ॥ ७८ ॥

निर्मुक्तकेश्या रतकेलिकाले सर्वत्र पृष्ठे ततकुन्तलालिः ।
भीताऽऽत्मैहर्तुर्दयितान्नितान्तं स्थितेव मूर्त्ताऽनुनिलीय लज्जा ॥७९॥

संशोध्यते दोर्धृतवेणिरन्यदोष्णस्तथा कङ्कतिनो रमण्या ।
प्रतीयते जाङ्गुलिको यथाहिं प्रखेलयन्हस्तधृतं स हस्तात् ॥ ८० ॥

अरश्मिकिञ्चिद्ग्रथितं नु पृष्ठे प्रलम्बते केशकुलं युवत्याः ।
उच्चैर्धृतं संकुचिताम्बरं वा मनोभुवो मेचकमातपत्रम् ॥ ८१ ॥

शिरोध्युपान्ते खलु दाक्षिणात्यसुवासिनीनां धृतपुष्पमालः ।
नीलाहिसंश्लिष्टसिताहिलीलामुपैति संवेष्टितकेशपाशः ॥ ८२ ॥

आदर्शमग्रे विनिधाय बाला सीमन्तकर्माभिरता कचानाम् ।
मध्यं चिरान्निश्चिनुते गृहीतदोःकङ्कतभ्रूयुगमध्यमानात् ॥ ८३ ॥

गलाग्रतो वक्षसि लम्बमानः सुश्रोणिकायाः पृथुकेशहस्तः ।
रोमाञ्चमालिङ्गनकालकान्तकरानुभूतेः क्षणमातनोति ॥ ८४ ॥

यूनो यथोद्भिन्नघनप्रकृष्टस्वश्मश्रुमार्ष्टौ हृदि कोपि मानः ।
नूनं युवत्या अपि केशवीथीः संमार्जयन्त्याः स तथैव बाढम् ॥ ८८ ॥

---

१ वल्नोद्वलनादिना. २ लज्जाहर्तुं. ३ पश्चान्निगुह्य. ४ पञ्चम्यन्तम्. ५ कालवेलिया इति प्र०. ६ नागदन्तावलम्बितम्. ७ पाणिधार्यमाङ्ग्ल वर्षातपसंवर छत्रम्. ८ गृहीत ज्ञात यद्दोपणि स्थितेन कङ्कतेन समुपलक्षितस्य भ्रूयुगमध्यस्य मान प्रमाणं तस्मात्, हेतौ पञ्चमीयम्. ९ विशालः केशकलापः । पाशः पक्षश्च हस्तश्च कलापार्थाः कचा इत्यमरः. १० उन्मोचनानन्तरमेव इदं च न प्रायिकम्. ११ चित्तोन्नतिः स्पष्टं लोके.

आकुञ्चितान्स्निग्धकचांस्तरुण्या निरीक्षमाणे चिरमिष्टदृष्टी ।
निशः गढकालिमवृत्ततारां मन्त्रस्य जानेऽनुभवं विधत्तः ॥ ८६ ॥

आस्ते प्रियायाः खलु तावदेव मध्यं कृशिष्ठव्यपदेशपात्रम् ।
न यावदात्मीयघनप्रलम्बशिरोरुहां पृष्ठभुवि प्रपातः ॥ ८७ ॥

मूर्धादृतः श्लक्ष्णदुकूलबध्यप्रगाढबन्धोत्कुटिलप्रवेण्या ।
विडम्ब्यते ज्यापरिमुक्तमकशरासनस्याकृतिरम्भ्रियस्य ॥ ८८ ॥

पृष्ठस्थितैका पटली कचानां द्वे चाननाग्रे स्खलिते सुदत्याः ।
गीतत्रयीवाभिगता युनद्या स्रोतस्त्रयी सूर्यसुवोऽपि नद्याः ॥ ८९ ॥

सीमन्तिता केशतटी नताङ्ग्या छिन्नप्रसूनावलिचित्रिताग्रा ।
प्रकाशकामार्पितमूर्धनीतप्रशस्तिपत्रीयुगली निजेव ॥ ९० ॥

स्मितप्रसारस्फुरितालिकाया आस्ते मुखेन्दुः स सुयौवनायाः ।
यस्याऽखिलस्यापि कलङ्कसंघः प्रलम्बकेशात्मतया दवीयान् ॥ ९१ ॥

लोलभ्रुवः स्निग्धशिरोरुहाणां प्रोत्तुङ्गपीनस्तनयोः पुरस्तात् ।
यादृक्परीरम्भरसः स मन्ये नितम्बयोरप्यनु तादृगेव ॥ ९२ ॥

क्षणेक्षितश्लक्ष्णविकीर्णवेणि निर्वर्णयन्त्या रमणं रमण्याः ।
अन्तर्निविष्टखरवीरपत्रिपुङ्खाः सपक्षा इव भान्ति केशाः ॥ ९३ ॥

स्थिता मखीनां वलये सलीलं प्रकुर्वती नैकविधानुलापान् ।
यथायथाऽऽस्यं वलयत्यभीक्ष्णं वेणिस्तथैवानुकरोति पश्चात् ॥ ९४ ॥

---

१ पति. २ नागमंत्र गहजप्रीतिमन्त्र प्राकृतिककेशनेत्रयोः कालिमतां- श्रेणी हेतु ३ वर्णोन्नताभाग, एवमेव वध्नामिह वेणी नवगुम्फिता दूरतोऽपि- न्नारिता दृश्यते. ४ निपु मेघमन्त्रेऽत्रियम् ५ सूर्यजाया यमुनाया. ६ न्व क्ष- १ नदित्रय तारिणीति प्रसङ्गेन राजा कागेन आपना पुनरङ्गीकारसूत्रकाचारपूर्वक ता प्रशस्तिपत्रद्वयी नापग न्न्मया गांगा गुणार्नि मर्कपकास्पद त्व निता- मधारीया भवती इति भिन्नवर्णावलीविशोभिता गा चाधिकृष्णकेशपाश धवल- विरचिन्नमनेन पर्णाभागर्कन बमाविना बोद्धा ७ अपिना तत्रावश्यक- १ गृह्यते. ८ उपरांम्य बन्ध्यमनुग्ने वा दीर्घ इति दीर्घ. ९ शरमचिरोद्गलि- पत्राच्या

शिरो यदेतत्तरुणाङ्गनानां तीर्थं किमप्येकमिदं मतं मे ।
स्नेहाञ्चिता यत्र सदा मिथस्ते स्वैकस्थिति बिभ्रति कृष्णकेशाः ॥९५॥

नीचैर्वलन्त्याः पुरुलम्बमाना प्राग्द्वैधभिन्ना चिकुरौघरेखा ।
आधारयष्टिर्द्वयवत्प्रपीवसुदुर्वहोरुस्तनयोश्चकास्ति ॥ ९६ ॥

विलासवत्याः किल पारसीक्याः केशावलिः शुक्लदुकूलनद्धा ।
मा सर्वथा द्रष्टृमनोऽन्धमस्तु हेतोरमुष्माद्विनिगूहितेव ॥ ९७ ॥

वधूर्वयस्याकृतचारुवेणिः समुत्थिताऽद्भिर्वदनं वनिज्य ।
दृष्टेक्षते योजितशीर्षवासाः स्वभिन्नवत्स्वं मुकुरे मुहूर्तम् ॥ ९८ ॥

प्राग्गुम्फयित्वा कवरीं वधूटी सक्तां विधायोरसि कञ्चुकीञ्च ।
चण्डातकं संपरिधाय गाढं सर्वं हि गाढं मनुते वपुः स्वम् ॥ ९९ ॥

चोल्युत्पलाभा चिबुसूचिदंशो दन्तेषु निश्चुक्कणमञ्जनं च ।
दृशोर्भ्रुवोरेणमदस्य रेखा शीर्षे कचाः सा तु तथापि गौरी ॥१००॥

क्षौमस्थिताया मृदुवातनुन्ना एणीदृशः शीर्षरुहादरार्द्राः ।
लोकाँश्चिराय भ्रमयन्ति नीलरुक्क्षौमतन्तुस्तवकीयमत्या ॥ १०१ ॥

ऋजून्मृदूँश्चाप्यपि मुग्धशुद्धान्निरागसोऽपि प्रपदान्तलग्नान् ।
स्निग्धानपि स्त्रीयसमस्तबालान्प्रबध्नती सत्यमियं हि वामा ॥ १०२ ॥

श्रीमद्विक्रमनृपतेः शरदि द्विशरग्रहेन्दुकलितायाम् ।
केकाहूतपयोदस्नपिताखिलजगति काले च ॥ १०३ ॥

---

१ कृष्णो विष्णु को ब्रह्मा ईशः शिवश्च ते मेचकाश्चिकुराश्च २ वक्षसि स्कन्धद्वयस्थितिरूपद्विप्रकारभिन्ना. ३ पारसीकस्य पारसाख्यदेशभवस्य पुरुपस्य स्त्री नितान्तगौरा सा हि सदा स्वकीय सुरुचिरं कुन्तलकलाप शुक्लेनैव वाससा पिदधाति, दृश्यमेतन्मुम्बापुर्यां साय नित्यदा समुद्रोपकण्ठे इति तस्याः. ४ एतेन वहुभिः प्रकारैर्जात तावत्स्वद्रष्टृमनोऽन्ध शक्तिभ्रष्टं तदद्य स्थितिमात्रैकप्रकारेणापि मा तथास्त्विति सूच्यते. ५ प्रक्षाल्य. ६ पूर्वं नै मनाक्सुरुचिरेव संप्रति जातवेणीका मुकुर पश्यन्ती दृष्टाऽन्यैवेति सुन्दरात्मरूपानुभवानन्दजन्यव्यामोहप्रकारः. ७ नखानारभ्य शिरःपर्यन्तम्. ८ अत्र कालिमा स्वरूपेण नोक्तोपि प्रतीयमानश्चमत्कुरुते. ९ । १९५२ । १० प्रावृषि.

श्रीरामचन्द्रानुकम्पासंपालितमुदितसर्ववास्तव्ये ।
जगदेकमाननीये जयशालिनि किञ्च जयनगरे ॥ १०४ ॥

श्रीहरिवल्लभशर्म्मा कविमल्लो लहरिवल्लभान्याख्यः ।
अकृतेदमेकृतकारं श्लोकशतं सुतनुचिकुराणाम् ॥ १०५ ॥

जयपुरि पुराणवसतौ गणगौरीगोपुरोत्तरश्रेणीम् ।
कौन्दुनिरधिवसति कविर्हरिवल्लभनामविख्यातः ॥ १ ॥

शृण्वन्ति न परकाव्यं दुर्वलिताक्षाश्च संवृतोष्ठा ये ।
ग्राम्याण्यपि पुनरथ ते विज्ञा मा नाम शृण्वन्तु ॥ २ ॥

पुरुपाठ्यसंघट्टः सेवितसाहित्यसिन्धुचरमतटः ।
इह हरिवल्लभभट्टः सुन्दरसँस्कृतकवित्ववीरभटः ॥ ३ ॥

स्तुतजयपुरराजगुरुः संधूपितशंभुसविधसाध्वगुरुः ।
एकोऽस्ति संश्रितगुरुर्द्विजहरिवल्लभकवित्वकारुगुरुः ॥ ४ ॥

हरिवल्लभ इह सरल सत्यं हरिवल्लभोऽस्ति सरलकृते ।
असरलकृतेऽपि सत्यं तथैव खलु भल्लवरिहोऽस्ति ॥ ५ ॥

---

१ अद्य नगरमहतेऽलतन्त्र, गमूलाहृतजीनेषु कर्मसु हृतकृत्प्रदा णमिति णम् तेन स्पीनमेव अह्न फरिरत्नाव्यम. २ त्रिभुवनपुर शिल्पी यस्य प्रतिक्षणमात्मभूरिति मुगामप्रयोग., जगाम्या पृञ्जयपुनात्रेति इपे इसान्त प्रमाणम् ३ पदय ग्राम्यमश्लीलम्

KÂVYAMÂLÂ. 32.

# THE SAHṚIDAYÂNANDA

OF

KṚISHNÂNANDA

EDITED BY

MAHÂMAHOPÂDHYÂYA PAṆDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKARAM JAVAJI

PROPRIETOR OF "JAVAJI DADAJI'S NIRNAYA-SAGARA" PRESS.

BOMBAY.

1892.

*Price 10 Annas*

काव्यमाला ३२.

कृष्णानन्दविरचितं

# सहृदयानन्दम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना
महामहोपाध्यायपण्डितदुर्गाप्रसादेन,
परवोपाह्वेन पाण्डुरङ्गतनूभुवा
काशीनाथशर्मणा च
संशोधितम् ।

तच्च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९२



मूल्यं १० आणकाः ।

# कृष्णानन्दः ।



वैदर्भीसूक्तिविभ्रमजन्मभूमिः कपिञ्जलकुलकुमुदिनीकलानिधिः सांधिविग्रहिको महापात्रः श्रीकृष्णानन्दमहाकविः कस्मिन्काले समुत्पन्न इति न ज्ञायते । परं चन्द्रशेखरकविसूनोर्विश्वनाथात्प्राचीनस्तदनुबन्धी चेति निर्विकल्पमवसीयते । यतो विश्वनाथरचितसाहित्यदर्पणस्याष्टमपरिच्छेदे 'सूचीमुखेन सकृदेव कृतव्रणस्त्वम्—' इति सहृदयानन्दस्थश्लोक उदाहृतः । अथास्य विश्वनाथस्य च सांधिविग्रहिक-महापात्रेति विशेषणद्वय समानम् । तत्र सांधिविग्रहिक इति राज्याधिकारिसूचकः पदविशेषः । संधिविग्रहे भवः साधिविग्रहिकः । एतत्पद ब्राह्मणादिसाधारणम्, न ब्राह्मणमात्रविषयकम् । तथाहि— 'तन्मातुलेन तद्रोषाद्वीरनाथेन योगिना । सांधिविग्रहिकेणाथ स स्वेनैव न्यगृह्यत ॥' इति राजतरङ्गिणी ६।१११ । '—लिखितं साधिविग्रहाधिकृत-दिविर-पतिवत्रभट्टिना' इति इण्डियन् आण्टिक्केरी १४।१८८५ । अत्र दिविर इति कायस्थस्य पर्यायान्तरम् । 'विना मद्यं विना मांसं परस्वहरणं विना । विना परोपकारेण दिविरो दिवि रोदिति ॥' इति लक्ष्यान्तरं च । महापात्र इति राजमन्त्रिसंज्ञान्तरमिति केचित् । तन्न । सर्वप्रधानाधिकारभाजः साधिविग्रहिक इति कथनानौचित्यात् । ब्राह्मणसंज्ञान्तरमित्यपरे । सामान्योपनामान्तरमितीतरे । अयं च जगन्नाथपुर्यामासीत् । एतन्निर्मितस्य सहृदयानन्दकाव्यस्य तत्र प्रसिद्धिरप्यास्ते ।

अमुष्य काव्यरत्नस्योत्कललिपिसमुल्लसित स्थलविशेषे सटिप्पणीकं सपादवर्षशतोट्टङ्कितमिवोपलक्ष्यमाणमेकं तालपत्रपुस्तकं भगवतः श्रीजगदीश्वरस्यार्चकान्मदनमोहनच्छात्रशिरोमणेरासाद्य तत्प्रतिरूपकं देवाक्षरैः संपाद्य च श्रीमन्तो विद्वन्मुकुटमणयो रायपुरीयहायूस्कूल्पाठकसत्तमाः सुगृहीतनामधेयाः 'वामन दाजी ओक' इत्याख्या महाशयवर्याः काव्यमालार्थमस्मभ्यं दत्तवन्त इति तेषां सौजन्यामृततरङ्गितान्तःकरणानामन्तर्वाणिवरेण्यानामुपकारं सप्रश्रयमुररीकुर्महे ।

अथैतत्कविप्रणीता काचन नैषधीयचरितटीकापि वर्तत इति तत्रत्येभ्यः श्रूयते । परमद्यावधि सा लोचनगोचरतां नागता । एवं सति नैषधीयचरितकर्तुः श्रीश्रीहर्षकवेरर्वाचीनः साहित्यदर्पणप्रणेतुः प्राचीनोऽयं कृष्णानन्दकविरिति परिणमति ।

श्रीहर्षस्तु भगवतः श्रीशंकराचार्यादर्वाचीनः पृथ्वीराजमहीपतेः प्राचीनः । यतोऽयं कविः स्वकीये खण्डनखण्डखाद्यनामके ग्रन्थे भगवत्पादस्य स्मरति, एनं च पृथ्वीराजसामन्तश्चन्दकविः स्वीये 'पृथ्वीराजरासा'संज्ञे निबन्धे स्तौति ।

---

१. 'भगवत्पादेन वा बादरायणीयेषु सूत्रेषु भाष्यं नाभापि' इति 'भगवत्पादेन शंकराचार्यपादेन । बादरायणो व्यासः' इति तत्र शंकरमिश्रव्याख्यानम्

जयमल्मेरमहीपालचरितरूपस्य सुदर्शनचम्पूकाव्यस्य निर्माता कृष्णानन्दस्माद्विन्नो नवीनश्च ।

हा हन्त तत्तद्ग्रन्थसहस्ररत्नपटलीशाणायितशेमुषीके महामहोपाध्यायपदभाक्तश्रीदुर्गाप्रसादे सुधर्माप्रणयिता गते द्वित्रमासपर्यन्तं प्रकृतग्रन्थसंपादने वैयाकरणश्रीशिवदत्तशर्मणा यः श्रमोऽकारि स धन्यवादपुरःसरं मुहुः स्मर्यते ।

# सहृदयानन्दस्य शोधनपत्रम्।

| पृ० | श्लो० | शुद्धम्। |
|---|---|---|
| ५ | ५० | विगाह्यमानं |
| ६ | ६५ | सयक्षरक्षः |
| ७ | ८५ | अद्य प्रभृत्येव |
| ८ | ५ | विसारि सर्वतः |
| १७ | २२ | वीक्ष्याननं |
| १८ | २७ | वलभी |
| १९ | ३३ | मधुपाः |
| २३ | ९ | गृहाङ्गने |
| २४ | १८ | वियदङ्गने |
| २४ | २१ | शश[धरः] |
| २४ | २२ | विरिञ्चिविमानक[धुर्य] |
| ३२ | १३ | सगर्भकाम् |
| ३२ | १८ | हिरण्मयैः स्वैः किरणैर्विराजितं |
| ३३ | ३१ | मुग्धाङ्गनया |
| ३३ | ३२ | दृक्पथं |
| ३४ | ४१ | मसिताब्जयोः |
| ३७ | ३२ | वारिणि |
| ३९ | ४७ | मण्डलवन्धना |
| ३९ | ५१ | मनन्य[पूर्वया] |
| ४१ | २६ | साम्राज्य |
| ४२ | ३३ | नीत्या चक्षुष्मतां |
| ४२ | ३७ | तेजो |
| ४३ | ४६ | शारीयं |
| ४४ | ५८ | दभ्याशे |
| ४४ | ५९ | शारीं |
| ४५ | ६९ | विक्रमोदयम् |
| ४५ | ७० | मुत्सेहे; "मुत्सहेत नलस्तदा' इति प्रतिभाति" इति टिप्पणमप्रयोजकम्. |
| ४६ | ५ | दपती |
| ४८ | ३३ | दङ्गन |

| पृ० | श्लो० | शुद्धम्। |
|---|---|---|
| ४९ | ३९ | कोणाः |
| ४९ | ३९ | गात्रे |
| ४९ | ४५ | तानभ्युपेत्य; प्रयतान्प्रयत्ना |
| ४९ | ४७ | विपरीतवृत्ति |
| ५० | ४८ | त्वत्प्रेमसूत्रेण |
| ५० | ५१ | त्वदाशापरि |
| ५० | ५२ | पुराजितानां; त्वमासीर्वचसां |
| ५० | ५३ | समन्तात् |
| ५० | ५४ | स्वां मतिमुज्जहाति; "स्वं पतिमुज्जहाति' इति भवेत्" इति टिप्पण प्रामादिकम्; रति |
| ५० | ५८ | विदर्भो पुर; 'काश्मीर' इति पदस्थस्य "कासारम्' इति तु व्यक्तम्" इति टिप्पणस्य स्थाने 'काश्मीर पुष्कर मूलम्' इत्युचितम्. |
| ५१ | ६० | सविधेऽस्त्विय; "स्त्वय इति स्यात्" इति टिप्पण्यप्रयोजिका. |
| ५१ | ६१ | नङ्क इदं |
| ५१ | ६६ | निर्झराम्बु दिनान्त |
| ५१ | ६७ | मसभ्रमं |
| ५१ | ६८ | कासार; चञ्चूः |
| ५१ | ७० | प्र[तिमल्ल]; अग्रे 'कालापकम्' इति पठनीयम्. |
| ५२ | १ | नभस्तमोभिः। |
| ५२ | ५ | रङ्गाङ्गनानि |
| ५२ | ७२ | तमिस्रैः; राजिनीलारुण; रकाचक्रवालैः |
| ५३ | ६ | अचि(र्मिषा)त्तत |
| ५३ | ७ | विष्वक्करैः |

| पृ० | श्लो० | शुद्धम् । |
|---|---|---|
| ५३ | १० | अन्त(र्दधत्स्फुरद) |
| ५३ | १० | ज्योतीरसाश्म |
| ५३ | १० | ननु |
| ५४ | १३ | तल्लिनोदरि |
| ५४ | १४ | गृहाङ्गन |
| ५५ | १९ | अर्धोपभुक्त |
| ५५ | २० | प्रति मुहु |
| ५५ | २१ | नाभ्युचितस्य |
| ५६ | २५ | आलोक |
| ५६ | २८ | श्वश्रू |
| ५६ | ३० | दंपती |
| ५७ | ३६ | शुक्ति |
| ५८ | ३८ | व्योमाङ्गन |
| ५८ | ४२ | विशेष(केण) |
| ५९ | ४५ | पतत्री |
| ५९ | ४७ | विष्वग्व्यापा |
| ६० | ७ | पतत्रिणः |
| ६० | १५ | पतत्रिणा |
| ६१ | २४ | पतत्रिणो |
| ६५ | ११ | द्युसदा |
| ६८ | ५ | 'नीलाम्भोरुहिणीकलिन्दतनयातोयप्रसूनं.' इत्येकम् । |
| ७१ | ११ | लक्ष्यता |
| ७२ | २४ | पृथिवीन्द्रं |

# काव्यमाला ।

## महाकविश्रीकृष्णानन्दप्रणीतं

## सहृदयानन्दम् ।

### प्रथमः सर्गः ।

यदिन्द्रियाणां विषयत्वमेति लोकेषु यत्तत्त्वमतीन्द्रियं च ।
कृत्स्नस्य तस्य प्रतिपत्तिहेतुर्वाग्देवता सा मयि संनिधत्ताम् ॥ १ ॥
दैत्येन्द्रमेकं करजैरनेकैर्विदारयन्क्रीडमिव प्रपन्नः ।
स्वच्छेषु मुक्तेष्वनुबिम्बदम्भात्कुर्वन्ननेकं जयतां नृसिंहः ॥ २ ॥
दोषोदये तोषमपि प्रपन्नः खलस्तुलामेति न कौशिकस्य ।
पूर्वस्य सर्वत्र विपक्षतास्ति निसर्गतोऽन्यस्य सपक्षतैव ॥ ३ ॥
धात्रा खलानां च सतां च किंचिद्विवेचनार्थं क्रियते न चिह्नम् ।
परस्य दोषेषु गुणेषु चामी प्रमोदलाभात्प्रकटीभवन्ति ॥ ४ ॥
रत्नस्य काव्यस्य च नूतनस्य तुल्यः स्वभावः प्रतिभासते मे ।
मृजाभिरेते निपुणैः कृताभिः समुश्नवाते हि गुणान्तराणि ॥ ५ ॥
ता एव नूनं सफलोदयाः स्युर्मुक्ताः प्रसन्नाः कविसूक्तयश्च ।
गुणोपपत्त्या कमनीयगुम्फाः कण्ठे सतां याः पदमाप्नुवन्ति ॥ ६ ॥
अत्रेतिवृत्ते रचितप्रबन्धे क्रुद्धो मुधा मास्तु कविः पुराणः ।
न स्पर्धया व्योम्नि सहस्रधाम्नः खद्योतकः स्वां द्युतिमातनोति ॥ ७ ॥
आसीदसीम्ना सहजेन धाम्ना निषिद्धशत्रुर्निषधेष्वधीशः ।
अनन्यसाधारणवीरसेनं यं वीरसेनं सुधियो वदन्ति ॥ ८ ॥
मध्यंदिने म्लायति कृष्णवर्त्मा दिनावसाने रविरस्तमेति ।
यस्य प्रतापः प्रतिपार्थिवानां दिवानिशं दुर्विषहो बभूव ॥ ९ ॥

शरन्निशानाथमरीचिगौरैर्विसृत्वरैर्यस्य यशःप्रवाहैः ।
प्रक्षाल्यमानेऽपि जगत्यरीणा मलीमसान्येव मुखान्यभूवन् ॥ १० ॥
युगान्तवातैस्तरलीकृतोर्मिर्वेलामतिक्रामति तोयराशिः ।
द्विषां जयैरुन्नतिमागतोऽपि न लङ्घयामास नृपः स्थितिं यः ॥ ११ ॥
दोर्दण्डदर्पस्तपनो यदीयस्तमो निरस्यन्नपि लोकवृत्ति ।
प्रत्यर्थिपृथ्वीपतिमण्डलस्य निमीलयामास मुखाम्बुजानि ॥ १२ ॥
क्वचिन्न या रज्यति भुज्यमाना गाढानुरागैरपि मेदिनीन्द्रैः ।
सैव क्षितिर्यं पतिमभ्युपेत्य पतिव्रतानां व्रतमन्वतिष्ठत् ॥ १३ ॥
निजेन धाम्ना जगतोऽखिलस्य दोषापनोदाय समुद्यतस्य ।
द्वीपेषु सप्तस्वपि निर्विशेषः करोदयो यस्य रवेरिवासीत् ॥ १४ ॥
अपि प्रभुः शास्त्रनियन्त्रितत्वाद्धर्मार्थकामानिव तुल्यवृत्तिः ।
पौरानसौ जानपदांश्च नित्यमन्योन्यबाधारहितं बभार ॥ १५ ॥
दिशामधीशैः पुरुहूतमुख्यैरपि प्रकामं स्पृहणीयलक्ष्मीः ।
ततः क्षितीन्द्रात्तनयोऽधिजज्ञे क्षीराम्बुराशेरिव कल्पवृक्षः ॥ १६ ॥
तस्मिन्क्षणे प्राङ्गणसीम्नि राज्ञः प्रसूनवृष्टिर्नभसः पपात ।
नीरन्ध्रमासादितया समन्ताद्यया हसन्तीव मही विरेजे ॥ १७ ॥
वसुंधरे सागरमेखलां त्वामनन्यसाधारणमेष भोक्ता ।
इतीव नादैः प्रथयाबभूवुर्वृन्दानि वृन्दारकदुन्दुभीनाम् ॥ १८ ॥
तदा कुमारोदयमङ्गलश्रीरास्थानभाजः पृथिवीश्वरस्य ।
न्यवेदि पूर्वं सुरपुष्पवर्षैर्योपिन्नियुक्तैश्चरमं तु चारैः ॥ १९ ॥
दुःखैरसंभिन्नगुरुप्रमोदा दोषेऽप्यनास्वादितदण्डभीतिः ।
संकल्पमात्रोपनतार्थसिद्धिस्तदाभवद्द्यौरिव राजधानी ॥ २० ॥
अन्तःपुरस्थोऽपि नरेन्द्रसूनुरानन्दयामास विशां मनांसि ।
पूर्वाद्रिशृङ्गान्तरितोऽपि भास्वान्प्रसादयत्येव दिशां मुखानि ॥ २१ ॥
ततो नियोगादवनीश्वरस्य पुरोधसा निर्मितजातकर्मा ।
स राजसूनुः सुतरां विरेजे नीहारनिर्मुक्त इवोष्णरश्मिः ॥ २२ ॥

---

१ स्वर्ग इव.

विलोकमानः कमनीयरूपं कुमारमारोप्य तमङ्कदेशे ।
निमेषचेष्टामपि पक्ष्मपङ्क्त्योश्चिरं विसस्मार महीमहेन्द्रः ॥ २३ ॥
लब्धार्थकामार्जनकोविदत्वमयं न लीयेत कदापि पापे ।
इतीव निश्चित्य गुरुर्निमित्तैश्चकार नाम्ना नलमात्मजं तम् ॥ २४ ॥
तस्यानिमित्तस्मितचन्द्रिकाभिर्यथा यथा जृम्भितमर्भकस्य ।
तथा तथासीदवनीश्वरस्य प्रवोदवारांनिधिरुत्तरङ्गः ॥ २५ ॥
पद्भ्यां हरिद्रारसरञ्जिताभ्यां स्पृष्टा मही यत्कमलाङ्किताभूत् ।
तेनैव तस्मिन्कमलोद्भवायाः सांनिध्यमुच्चैः प्रथयांबभूव ॥ २६ ॥
बाल्यादनाविष्कृतवर्णभेदैर्वचोभिरर्धोच्चरितैस्तदीयैः ।
राज्ञः प्रमोदः प्रथमं व्यधायि लिङ्गैस्तु पश्चात्कथितस्तदर्थः ॥ २७ ॥
निर्मीयमाणा निपुणैर्नृपस्य नेपथ्यलक्ष्मीर्न तथा प्रियासीत् ।
यथा यदृच्छारसिकस्य तस्य विलुप्यमाना करपल्लवेन ॥ २८ ॥
संस्पर्धमानेव नराधिपस्य प्रमोदलक्ष्मीं मुहुरुल्लसन्तीम् ।
दिने दिने तस्य शरीरयष्टिर्नवां नवां वृद्धिमुपारुरोह ॥ २९ ॥
अभ्यासहेतोः क्षिपतः पृषत्कान्त्याकृष्टिजन्मा ध्वनिरस्य योऽभूत् ।
तेनैव दर्पः प्रतिपार्थिवानां धनुर्भृतां दूरतरं निरस्तः ॥ ३० ॥
न केवलं लोचनवर्त्मवर्ति शराः शरव्यं जगृहुस्तदीयाः ।
शब्देन दूरादनुमीयमानं विचिन्त्यमानं मनसापि भेजुः ॥ ३१ ॥
आतिथ्यमक्ष्णोः क्षणमभ्युपैति सौदामनी व्योम्नि विजृम्भमाणा ।
कृपाणपाणेर्धृतचर्मणस्तु नलस्य नालक्षि गतिर्जनेन ॥ ३२ ॥
विद्यासु सर्वासु तथा चकार परिश्रमं राजसुतः क्रमेण ।
निश्चायकं संशयितेऽर्थतत्त्वे मेने यथैनं निवहो गुरूणाम् ॥ ३३ ॥
अथौषधिः कान्तिविशेषवृद्धेः साम्राज्यलक्ष्मीः स्मरपार्थिवस्य ।
नीराजना विक्रमकुञ्जरस्य नलं सिषेवे नवयौवनश्रीः ॥ ३४ ॥
पीयूषरश्मेरपहाय मध्यं भजेदुपान्तं यदि प(ल)क्ष्मलेखा ।
नवोदितश्मश्रुलताभिरामं तदोपमीयेत मुखं नलस्य ॥ ३५ ॥

महीभुजां संयति निर्जितानां श्रियः करिष्यन्ति निवासमस्मिन् ।
इतीव निश्चित्य विधिश्चकार प्रकामविस्तीर्णममुष्य वक्षः ॥ ३६ ॥

नरेन्द्रसूनुः कृशिमातिरेकात्परं न मध्येन जिगाय सिंहान् ।
दृप्तारिवीरद्विपदारणेन नैसर्गिकेणापि पराक्रमेण ॥ ३७ ॥

मौर्वीकिणश्यामिकया कृताङ्कमाजानु दीर्घं भुजयुग्ममस्य ।
विलोकमानः परिपन्थिलोकः स्वे भाविनि श्रेयसि निःस्पृहोऽभूत् ॥ ३८ ॥

गाम्भीर्यमब्धिं स्थिरता नगेन्द्रं प्रभा दिनेशं कमनीयतेन्दुम् ।
अप्येकमेनं निखिलो गुणौघः परस्परस्पर्धितयेव भेजे ॥ ३९ ॥

ततः स्वदोर्दण्डपरीक्षणाय कदाचिदभ्याशजुषां मुखेन ।
शस्त्रेण साध्यं पृथिवीन्द्रसूनुः किंचिद्विधेयं पितरं ययाचे ॥ ४० ॥

अथ क्षितिं वीक्ष्य जितामशेषां स्वेनैव धाम्ना निषधाधिनाथः ।
दोर्दण्डकण्डूमपनोदयिष्यन्दिदेश सूनोर्मृगयाविहारम् ॥ ४१ ॥

आपांसुकेलि प्रतिपन्नसख्यैरुपात्तशस्त्रैः सह मन्त्रिपुत्रैः ।
बिभ्रद्धनुः पार्श्वनिषक्ततूणः स वाहमारुह्य वनं प्रतस्थे ॥ ४२ ॥

पतिः पृथिव्यास्तमनु प्रयातुं चमूचरानाटविकान्दिदेश ।
स केवलं तान्पितृगौरवेण न कार्यबुध्यानुचरांश्चकार ॥ ४३ ॥

नेत्राञ्चलैरेव मृगेक्षणानां निपीयमाननचन्द्रलक्ष्मीः ।
पुरीमतिक्रम्य नगोपकण्ठे खेलत्कुरङ्गं स्थलमाससाद ॥ ४४ ॥

तथा स चक्रे भुवि मण्डलानि सव्यापसव्यानि तुरंगमेण ।
यथा मृगैरप्यनवाप्य मार्गं तन्मध्य एव भ्रमता व्यधायि ॥ ४५ ॥

विहाय तेषां सरणिं स भूयो हयं तथा तीव्ररयं चकार ।
दूरं प्रयातानपि तानतीत्य यथा निवृत्तेषुभिराजघान ॥ ४६ ॥

इतस्ततो विद्रवता मृगाणां येषां विषाणानि नलश्चकर्त ।
संरोप्यमाणैर्विशिखैः शिरःसु पुनः सशृङ्गानिव तांश्चकार ॥ ४७ ॥

ततस्तुरंगोद्धतधूलिचक्रं स्थलं परिक्षीणमृगं विहाय ।
अग्रेसरैः कैश्चन कृष्णसारैरादिष्टवर्त्मेव वनं स भेजे ॥ ४८ ॥

कुरङ्गकैः कीर्णनिकुञ्जगर्भं भुजंगमैः शंसितभूमिरन्ध्रम् ।
शाखामृगैर्लङ्घिततुङ्गशाखं खगैः समासादितपादपाग्रम् ॥ ४९ ॥

सिंहैः समाक्रान्तदरीविशेषं तरक्षुभिः काङ्क्षितसान्द्रकक्षम् ।
विगाहमानं परितो नलेन विनीतवत्काननमात्रभासे ॥ ५० ॥ (युग्मम्)

प्रतिस्वनाक्रान्तदिगन्तरेण ज्याकृष्टिघोषेण गणो मृगाणाम् ।
तमेव सर्वत्र विशङ्कमानः पाशैर्विना बद्ध इवावतस्थे ॥ ५१ ॥

प्रवेष्टुकामानिव भीतिवेगात्क्षितिं मुखैरुल्लिखतो वराहान् ।
फूत्कारघोषेण निवेद्यमानान्ददर्श दूरादवनीन्द्रसूनुः ॥ ५२ ॥

तरस्विना तेन नृपात्मजेन विकृष्य चापं कुतुकाद्विमुक्तैः ।
नीरन्ध्रमङ्गेषु शरैर्निखातैः प्रापुः श्रियं शल्लकिनां वराहाः ॥ ५३ ॥

धनुर्भृता तेन शरो विमुक्तः शिक्षाविशेषादविशीर्णवेगः ।
प्रदीर्घपङ्क्तिः क्वचिदेकपद्यामेकोऽपि यूथं बिभिदे मृगाणाम् ॥ ५४ ॥

वाहद्विषां निष्पततां पुरस्ताद्विषाणचक्रं स तथा चकर्त ।
अभ्याशभाजोऽपि विलोक्य वाहान्द्वेषं यथैते सफलं न कुर्युः ॥ ५५ ॥

स बाणवर्त्मन्यपि वर्तमानान्कपीनमुञ्चत्करुणार्द्रचेताः ।
संरक्षतः स्वावयवानुपेक्ष्य कण्ठेषु डिम्भानवलम्बमानान् ॥ ५६ ॥

निकुञ्जलीनः क्षुधितस्तरक्षुर्विक्रम्य जग्राह मृगं न यावत् ।
नृपात्मजस्तावदुपेत्य वेगादुद्धृत्य कुन्तेन तमुद्बभार ॥ ५७ ॥

अलक्षितः क्वापि जवातिरेकाच्चमूचरैः सान्द्रमहीरुहेषु ।
भ्रमन्वनान्तेषु मृगानुसारी पद्माकरं कंचिदसौ ददर्श ॥ ५८ ॥

किंचिन्निपीतक्लमवारिबिन्दुः सरोजसंसर्गवतानिलेन ।
स तस्य तीरे सुखसुप्तहंसे नरेन्द्रसूनुः सुचिरं चचार ॥ ५९ ॥

मुखे प्रियायाः प्रणयानुबन्धाद्बालं मृणालाङ्कुरमर्पयन्तम् ।
सरोजिनीपत्रनिषण्णमेकं हिरण्मयं हंसमसौ ददर्श ॥ ६० ॥

तं धारयिष्यन्नविपन्नमेव संमोहनास्त्रं स समाददे च ।
लताश्रितानां वनदेवतानां शुश्राव वाक्यं च मनोज्ञमेतत् ॥ ६१ ॥

चापादपाकृष्य नरेन्द्रसूनो शिलीमुखं तूणमुखे निधेहि ।
संपादयिष्यत्ययमीप्सितं यत्तवानुरूपं तनुरूपलक्ष्म्याः ॥ ६२ ॥
ततस्तदाकर्ण्य वचः कुमारः सविस्मयं तद्विदधे तथैव ।
उपेत्य हंसः सुविदूर एव निषेदिवानित्थमुदाजहार ॥ ६३ ॥
मधुद्विषो नाभिसरोजजन्मा निर्माणशिल्पी जगतां त्रयाणाम् ।
त्रयीलतोन्मीलनमूलकन्दः करोतु देवस्तव मङ्गलानि ॥ ६४ ॥
त्रैलोक्यभर्तुः कमलासनस्य विमानधुर्याधिपतित्वलाभात् ।
सरक्षयक्षःसुरकिंनरेषु लोकेषु पूज्या मम तातपादाः ॥ ६५ ॥
स्वकर्म मां शिक्षयता विमाने पित्रा नियुक्तं क्षणमप्यवेक्ष्य ।
निजासनाम्भोरुहकेसरैर्मे श्रमापनोदं कुरुते विरिञ्चिः ॥ ६६ ॥
स्नानोन्मुखीनां सुरसुन्दरीणां काश्मीरपङ्कैः परिपिञ्जरेषु ।
अदूरमन्दारतरुप्रसूनैः समीरमुक्तैः सुरभीकृतेषु ॥ ६७ ॥
दिक्कुञ्जराणामविरामपातैर्मदाम्बुभिः कर्बुरितोदरेषु ।
चरामि सार्धं सहचारिणीभिः स्वर्गापगायाः पुलिनान्तरेषु ॥ ६८ ॥ (युग्मम्)
कौमारमारभ्य सुताः सुराणां जयन्तमुख्या अपि बद्धसख्याः ।
तथापि भूयांस्तव दर्शनोत्थश्चित्तेऽपि संमाति न मे प्रमोदः ॥ ६९ ॥
न मानसे नैव सुमेरुशृङ्गे न नन्दने नापि गृहे विरिञ्चेः ।
न क्वापि गन्तुं वलते मनो मे त्वया सनाथामवनीं विहाय ॥ ७० ॥
सख्यं त्वया साधयितुं ततो मां स्पृहातिरेकस्तरलीकरोति ।
पुष्पेषुपुष्पाकरयोरिवास्तु तदावयोः स्याद्यदि कौतुकं ते ॥ ७१ ॥
ततः समास्थाय स मौनबन्धं मन्दाकिनीपुष्करगन्धभाजा ।
अमार्जयत्पक्षपुटानिलेन तदङ्गलग्नानि रजांसि हंसः ॥ ७२ ॥
भवादृशानां मनुजेषु सख्यं मनोरथानामपि दूरवर्ति ।
तदद्य संपादयतो विधातुरहेतुकोऽयं मयि पक्षपातः ॥ ७३ ॥
मृगार्थमित्थं भ्रमतो वनेषु दैवादभूद्यस्त्वयि सख्यबन्धः ।
स एष पाषाणकणाञ्जिघृक्षोः करोदरे मौक्तिकपुञ्जपातः ॥ ७४ ॥

अद्य प्रभृत्येव सखा त्वमेकः प्रेमास्पदं स्वादपि जीवितान्मे ।
इति ब्रुवन्नेव नरेन्द्रसूनुः करेण कण्ठे खगमाममर्श ॥ ७५ ॥

इत्थं प्रसादाभिमुखेन धात्रा निर्यत्नमावर्जितसख्यबन्धौ ।
तौ तस्थतुस्तत्र मुहूर्तमात्रं परस्पराभाषणकौतुकेन ॥ ७६ ॥

स्वस्त्यस्तु ते संप्रति साधयामि निवेदितं यद्वनदेवताभिः ।
संतर्पयिष्यामि दृशौ वयस्य भूयस्तवालोकरसायनेन ॥ ७७ ॥

जाता दिनश्रीर्जरती तदेष गृहानुपैतुं समयस्तवापि ।
इत्थं वचः कर्णपथाभिराममुदीर्य हंसो वियदुत्पपात ॥ ७८ ॥

अतीतदृग्वर्त्मनि हेमहंसे क्रमादुपेतेषु चमूचरेषु ।
शरीरमात्रेण पुरं प्रतस्थे नलोऽन्वगच्छन्मनसा तमेव ॥ ७९ ॥

प्रेम्णाह्वयन्तीमिव दीर्घदीर्घैः प्रदोषशङ्खध्वनिभिर्विदूरात् ।
संध्यांशुदम्भादनुबद्धरागां नलः प्रपेदे कुलराजधानीम् ॥ ८० ॥

तदद्भुतं तस्य वनान्तवृत्तं सुहृत्सु शंसत्सु परस्परेण ।
स्मरन्मुहुः स्वर्णविहंगमस्य निशामनैषीन्निषधेन्द्रसूनुः ॥ ८१ ॥

वनेषु तस्याचरितं चरेण विज्ञाय राज्ञो भृशमुत्सुकस्य ।
प्रत्यूषकृत्यं विधिवद्विधाय मूर्ध्ना ववन्दे चरणौ कुमारः ॥ ८२ ॥

अथाभिनन्द्यात्मजमादरेण दोर्भ्यां परिष्वज्य पतिः पृथिव्याः ।
मौलेष्वमात्येषु दृशौ निवेश्य प्रमोदबाष्पाकुलमित्युवाच ॥ ८३ ॥

गुणैरुदारैर्विनयावतंसैर्निरस्तसाम्येन भुजौजसा च ।
आरोपितोऽहं धुरि पुत्रभाजां वत्स त्वयाविष्कृतपौरुषेण ॥ ८४ ॥

अद्यप्रभृत्येव नरेन्द्रलक्ष्मीर्मयानुशिष्टास्तु वशंवदा ते ।
श्रेयस्तपःसाधनमेव राज्ञां ज्ञातानुभावेषु तनूद्भवेषु ॥ ८५ ॥

तदेष रक्षाविधये प्रजानां नक्तंदिवं जाग्रदवाप्तखेदः ।
धुरं धरिञ्यास्त्वयि संनिवेश्य चिराय विश्राम्यतु वीरसेनः ॥ ८६ ॥

निवार्यमाणोऽपि मुहुः प्रणम्य नलेन बद्धाञ्जलिसंपुटेन ।
निवेश्य तस्मिन्नवनीन्द्रलक्ष्मीमुपाददे लक्ष्म तपोधनानाम् ॥ ८७ ॥

स बाष्पमोक्षैरपि न क्षमोऽभूत्पितुः समारम्भनिवर्तनाय ।
विपर्ययं नैति महात्मनां हि प्रतिश्रुतोऽर्थः प्रतिबन्धकेन ॥ ८८ ॥
अनुप्रयातः सह पौरवर्गैर्नलेन पर्यश्रुविलोचनेन ।
चिरावृतः क्ष्मातिलकः प्रतस्थे तपोवनं निर्विषयाभिलाषः ॥ ८९ ॥
शोकाग्निवेगं वचनामृतेन चिरान्मृदूकृत्य नृपः सुतस्य ।
तं पौरमुख्यैः स्वपुरं प्रवेश्य चकार वश्येन शरीरवृत्तिम् ॥ ९० ॥
वैखानसैर्मुनिजनैरभिनन्द्यमानः
संसिद्धिमाप तपसः किल वीरसेनः ।
भेजे नलस्त्वखिलपार्थिवमौलिरत्नै-
र्नीराज्यमानचरणः पृथिवीन्द्रलक्ष्मीम् ॥ ९१ ॥

इति श्रीसाधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते
नलसाम्राज्यलाभो नाम प्रथमः सर्गः ।

---

द्वितीयः सर्गः ।

ोऽभ्यषिञ्चन्विधिवन्नलं द्विजाः सतां प्रमोदात्तरलं मनोऽभवत् ।
कार लक्ष्मीः पदमस्य वक्षसि प्रपेदिरे संपदमूर्जितां प्रजाः ॥ १ ॥
न्द्रलक्ष्म्याः परिरम्भसंभवां तथा न भेजे मुदमूर्जितां नलः ।
तुः सपर्याविरहेण संभृतां यथोपलेभे परितापसंपदम् ॥ २ ॥
पि स्वयं पार्थिवनीतिपारगः स मन्त्रिणां संमतिमन्ववर्तत ।
धूदयासादितवृद्धिरम्बुधिर्न जातु वेलामभिलङ्घ्य गच्छति ॥ ३ ॥
तोदये सीदति कैरवं रवौ तुषारभानौ कमलं निमीलति ।
शेषमुच्चैर्मुदमाददे जगन्निषेव्यमाणे तु नले नृपश्रिया ॥ ४ ॥
त्रोदयेनेव सहस्रभानुना स्वमण्डलं तेन समन्वरज्यत ।
मुष्य तेजस्तु विसारि सर्वतः परं द्विषामेव बभूव दुःसहम् ॥ ५ ॥
रीरभाजां करणीयसाक्षिणः परेषु मित्रेषु च तुल्यवृत्तयः ।
चिरुरेतस्य दिने दिने चराः करास्तुषारेतरदीधितेरिव ॥ ६ ॥
विश्य रन्ध्राणि तनून्यपि द्विषामुदीरयामास स वृत्तिमौरगीम् ।
रांसि तुङ्गान्युपनीय नम्रतां वितेनिरे तत्र परे तु वैतसीम् ॥ ७ ॥

अपि त्रिलोकीं विजहार लीलया निरर्गलं दोर्द्रविणार्जितं यशः ।
अमुष्य मन्त्रस्तु कदाचिदाययौ न कर्णमूलान्यपि पार्श्ववर्तिनाम् ॥ ८
यथेन्द्रियाणां निवहो निजं निजं विहाय नान्यं विषयं निषेवते ।
तथा जनस्तेन कृतानुशासनः पथः स्वकीयादपरं न शिश्रिये ॥ ९
निरूपिते वर्त्मनि शास्त्रचक्षुषा पदं वितन्वन्नकृताङ्गपीडनः ।
अणीयसोऽपि प्रकटीकृताङ्कुरानलुण्ठयत्क्ष्मातिलकः स कण्टकान् ॥ १
निरर्गलं शैलवनाभिगामिनीमपीडयन्नेव करेण गामसौ ।
वृषं पुरस्कृत्य समीहितं दुहन्नदृष्टपूर्वां स्फुटमाप गोपताम् ॥ ११ ॥
न केवलं दण्डभयाज्जनोऽखिलस्तदाभवत्तत्करतापसंमुखः ।
अभून्न तादृग्विषयोऽपि देहिनां मनोरथो येन जगाम वन्ध्यताम् ॥ १
निरङ्कुशस्तस्य यशोमतङ्गजः प्रतापसिन्दूररजोरुणाननः ।
निरस्य यन्तारमितस्ततश्चरन्नरिद्विपानां समशोपयन्मदम् ॥ १३ ॥
इति व्यपास्य व्यसनान्यनारतं प्रपास्यतस्तस्य मही महीभुजः ।
उपायनीकर्तुमिवावनीरुहां प्रसूनकोपादुदभून्नवो मधुः ॥ १४ ॥
शरीरभाजां जनयिष्यते मुदं निदेशलाभादिव मेदिनीपतेः ।
न वासरस्तीव्रतरातपोऽभवन्निशापि नातीव तुषारदूषिता ॥ १५ ॥
अनु प्रतस्थे मलयाद्रिमारुतस्त्विषांपतिं प्रस्थितमुत्तरां दिशम् ।
विहाय मार्गं महनीयतेजसां निजेच्छया चेष्टितुमुत्सहेत कः ॥ १६
सरोरुहाणां सुहृदां पराभवादवाप्तविद्वेष इवानुवासरम् ।
क्रमेण संपादितपाटवैः करैर्जहार नीहारपरम्परां रविः ॥ १७ ॥
विलोक्य रत्नाकरमेखलां भुवं स्ववंशकेतावनुरागिणीं नलः ।
प्रमोदलाभादिव शीतदीधितिः प्रसादसंपत्तिमवाप कामपि ॥ १८ ।
हितं प्रजानां सततं विधित्सतः क्षणप्रदानार्थमिवास्य भूपतेः ।
निरस्य रात्रेः परिणाहसंपदं रविर्दिनं द्राघयितुं प्रचक्रमे ॥ १९ ॥
लताः परीरम्भमवाप्य निर्भरं नभस्वतश्चन्दनशैलजन्मनः ।
समुल्लसन्नूतनपल्लवच्छलाद्व्यजृम्भयन्रागमिवान्तरं बहिः ॥ २० ॥

विचुम्बनेऽपि क्षमतामनागता वितन्वती केवलमुत्सवं दृशोः ।
बभूव मुग्धा सहकारमञ्जरी पिकस्य मौनव्रतभञ्जने पटुः ॥ २१ ॥
मयैव कृत्स्नं जगदद्य निर्जितं वयस्य दूरेऽस्तु शरव्ययस्तव ।
इतीव पुंस्कोकिलकूजितच्छलादुदीरयामास मधुर्मनोभवम् ॥ २२ ॥
प्रसूनसौरभ्यहरं समीरणं नियन्तुमभ्युत्सुकतामुपागताः ।
विलोलपुष्पंधयमण्डलीमिषादुदक्षिपन्पाशमिवायसं द्रुमाः ॥ २३ ॥
परागपूरैः करिकेसरोद्भवैः पिशङ्गिताङ्गः समदो मधुव्रतः ।
चिरं वितन्वन्नपि चाटुचातुरीं विमृश्य दीर्घं प्रिययान्वगम्यत ॥ २४ ॥
लताः परिष्वज्य हठान्नभस्वता विमुच्यमानाः प्रतिलोलपल्लवाः ।
मधुव्रतौघैश्चपलैर्विरेजिरे विमर्दमुक्तैः कबरीभरैरिव ॥ २५ ॥
परिप्लवा मूर्ध्नि लवङ्गवीरुधः शिलीमुखालिः सुतरां व्यराजत ।
नभस्वता चन्दनशैलतश्चिरादुपेत्य मुक्ता किमु वेणिरायता ॥ २६ ॥
निसर्गशोणैर्ललितः सपल्लवैर्नवैरशोकः स्तबकैरशोभत ।
निचीयमानः श्वसितैर्वियोगिनां मनोभवाग्निः किमु राशितां गतः॥२७॥
निराकृतः कण्टकमालया बहिः समाहृतः सौरभसंपदान्तिकम् ।
बभूव रोलम्बयुवा न चुम्बितुं प्रभुर्विमोक्तुं च सुवर्णकेतकीम् ॥ २८ ॥
इति प्रगल्भे सुरभौ निरङ्कुशं पिकस्वनैर्गायति मन्मथस्तवम् ।
हिरण्मयं पत्रिणमेव तं स्मरन्नरंस्त भावेषु न केषुचिन्नलः ॥ २९ ॥
अपाकरिष्यन्नथ मानसीं रुजं नृपः कदाचिद्गृहदीर्घिकां ययौ ।
जवातिरेकादवितर्किताऽऽगतिः स चोपतस्थे पतगोत्तमः पुरः ॥ ३० ॥
ससंभ्रमं तौ नयनातिथीकृतौ परस्परं कल्पितबन्धुसत्क्रियौ ।
मिथः कथालापरसायनैरुभौ निषेदतुः क्वापि निकुञ्जमन्दिरे ॥ ३१ ॥
सुरापगाशीकरसङ्गशीतलं पतंगमुत्सङ्गतले निवेशयन् ।
विशांपतिः प्रेमवशाद्विसाङ्कुरं करेण तस्याभिमुखं न्यवेशयत् ॥ ३२ ॥
अनन्तरं स्मेरसरोजसोदरे मुखे नरेन्द्रस्य निवेश्य लोचने ।
सुधारसस्यन्दि मनोहरं क्षणादवोचदित्थं वचनं विहंगमः ॥ ३३ ॥

अवाप नूनं परिपाकसंपदं वसुंधरायाश्चिरसंचितं तपः ।
पुरंदरं द्यौरिव येयमीश्वरं सखे भवन्तं समुपस्थिता स्वयम् ॥ ३४ ॥
दिने दिने किंनरसुन्दरीजनैः सुखोषितैः कल्पमहीरुहामधः ।
अनन्यसामान्यतया सकौतुकं सुधांशुशुभ्रं तव गीयते यशः ॥ ३५ ॥
कथाप्रसङ्गेन वयस्य भूभुजां गुणोत्तरं पृच्छति वृत्रवैरिणि ।
उदाहरन्ति प्रथमं सकौतुकाः पुनः पुनस्त्वां सुरसिद्धचारणाः ॥ ३६ ॥
अहं च साम्राज्यसुखेऽपि निःस्पृहं मनस्त्वदीयं मयि दूरवर्तिनि ।
विदन्नपि त्वामपहाय यच्चिरं चरामि दूरे शृणु तत्र कारणम् ॥ ३७ ॥
यदैव पूर्वं वनदेवतामुखैर्न्यवेदयं साधयितुं त्वदीप्सितम् ।
तदैव लोकोत्तररूपशालिनीं तवोपनेतुं महिषीमचिन्तयम् ॥ ३८ ॥
ततोऽनुरूपां तव रूपसंपदः पुरंदरस्यापि पुरे मृगीदृशम् ।
अपश्यतः स्वीकृतभङ्गशङ्किनः कृतं पदं चेतसि चिन्तया मम ॥ ३९ ॥
कदापि सेवावसरे दिवौकसां मनोभवं प्राञ्जलिमग्रतः स्थितम् ।
उपास्यमानः सुरसुन्दरीजनैः कुतूहलादित्थमुवाच वासवः ॥ ४० ॥
जगत्त्रयेऽस्मिन्नितरेतराधिकाः [सहस्रशः] सन्ति मनोरमाः स्त्रियः ।
वशंवदं विश्वममूर्वितन्वते त्वयोपदिष्टैस्तु विलासचेष्टितैः ॥ ४१ ॥
ततः प्रसूनाशुग वामचक्षुषां विशेषितत्वं त्वमवैषि केवलम् ।
निरस्य दाक्षिण्यमुदाहरस्व तां गुणैः स्वरूपेण च या विशिष्यते ॥४२॥
निजेषु रूपातिशयेषु संशयं प्रयाति वृन्दारकसुन्दरीजने ।
कुतूहलेनोत्तरलेषु नाकिनां गणेष्वनङ्गः शतमन्युमब्रवीत् ॥ ४३ ॥
जगत्त्रये किंचिदपीह विद्यते न ते सहस्राक्ष परोक्षतां गतम् ।
तथापि यन्मामनुयोक्तुमीहसे विधेयतां मे सफलीकरोषि तत् ॥ ४४ ॥
पुरी विदर्भा विदितैव ते विभो निजैर्गुणैर्या विजिगीषते दिवम् ।
भुनक्ति तां वैरिषु भीमविक्रमः प्रभुर्भुवो भीम इति प्रथां गतः ॥४५॥
सुतां स लेभे कमनीयविग्रहां प्रसाद्य भक्त्या दमनाह्वयं मुनिम् ।
अतोऽस्य नाम्नैव कृतोपलक्षणा जनेन साभूद्दमयन्त्युदीरिता ॥ ४६ ॥

असौ जगन्नेत्रचकोरचन्द्रिका विसारिलावण्यतरङ्गदीर्घिका ।
अलंकृता नातिचिरात्कृशोदरी वयोविशेषेण मदेकबन्धुना ॥ ४७ ॥
कुतूहलेनोत्तरलो यदा विधिः शिरीषपुष्पादपकृष्य मार्दवम् ।
करिष्यते काञ्चनयष्टिगोचरं वपुस्तदास्यास्तुलनामुपैष्यति ॥ ४८ ॥
निसर्गसौरभ्यदरिद्रतां यदा कलापिनः पिच्छभरं विमोक्ष्यति ।
मृगीदृशोऽस्याश्चिकुरोत्करश्रियस्तदोपमानं सुलभं भविष्यति ॥ ४९ ॥
सुधामयूखेऽपि कलङ्कदूषिते प्रदोषसंकोचिषु पङ्कजेष्वपि ।
विलज्जितः शिल्पमदोद्धुरो विधिर्व्यधत्त तस्याः कमनीयमाननम् ॥५०॥
शरैर्मदीयैरपि कुण्ठता श्रिता वशीकृतान्तःकरणेषु केषुचित् ।
मृगीदृशोऽस्यास्तु दृगन्तविभ्रमः करोति तेषामपि धैर्यविच्युतिम्॥५१॥
कुरङ्गमुत्सङ्गशयं शरद्विधुर्विधूय धत्ते यदि तद्दृशौ परम् ।
मृगेक्षणायाश्चटुलाक्षमाननं तदा निकामं तुलनामुपैष्यति ॥ ५२ ॥
निमीलयन्त्यारुणरत्नदीधितिं विलज्जयन्त्या नवपल्लवश्रियम् ।
समुल्लसन्त्याधरकान्तिसंपदा विकासिबन्धूकमधः करोति सा ॥ ५३ ॥
इमौ मृदू निर्भरमसि कर्कशं स्थितिः सहाभ्यां मम नैव सांप्रतम् ।
इतीव तस्याः परिणाहसंपदा भुजौ विदूरं नुदति स्तनद्वयम् ॥ ५४ ॥
तदीयमालोहितपाणिपल्लवं शिरीषमालामृदुलं भुजद्वयम् ।
विडम्बयन्भाति मृणालकाण्डयोरधोमुखस्मेरसरोजयोः श्रियम् ॥ ५५ ॥
विधाय मध्यं सुतनोस्तथा तनुं बभूव तद्भङ्गभयाकुलो विधिः ।
यदेष पश्चात्त्रिवलीमिषादमुं चकार हैमैर्वलयैर्वृतं त्रिभिः ॥ ५६ ॥
परस्परस्पास्पदलब्धनिपिणोर्निवारणाय स्तनयोर्मृगीदृशः ।
तनूरुहश्रेणिमिषान्नवं वयः करोति सीमानमिवानयोरधः ॥ ५७ ॥
किमुच्यतेऽस्याः प्रथिमा नितम्बयोर्यदत्र दृष्टिः पतिता विलासिनाम् ।
चिरं परिभ्रम्य कुतूहलाद्भृशं श्रमादिवान्यत्र न गन्तुमिच्छति ॥५८॥
निरस्तरम्भालरुरामणीयकं तदीयमूरुद्वितयं विचिन्तयन् ।
अनादरोऽहं विषयान्तरे मुहुः करोम्यसूयाकुटिलेक्षणां रतिम् ॥५९॥
विकस्वरैर्लोहितपङ्कजैस्तुल्यं विलोक्य पादद्वितयं दमस्वसुः ।
गुणाधिकं कर्तुमिदं समुत्सुकश्चकार धाता नखमु(मौ)क्तिकाङ्कितम् ६०

